**ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।**
**श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥** २०

इति श्रीमद्भगवद्गीतासूपनिषत्सु परब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
भक्तियोगो नाम द्वादशोऽध्यायः ॥ १२ ॥
श्रीकृष्णाय परब्रह्मणे नमः.

---

रा ॥ **धर्म्यं चामृतं चेति धर्म्यामृतं, ये तु प्राप्यसमं प्रापकं भक्तियोगं, यथोक्तं —'मय्यावेश्य मनो ये माम्' इत्यादिनोक्तेन प्रकारेण, उपासते ; ते भक्ताः अतितरां मम प्रियाः ॥ २० ॥**

इति श्रीभगवद्रामानुजविरचिते श्रीमद्गीताभाष्ये द्वादशोऽध्यायः ॥ १२ ॥
श्रीमते रामानुजाय नमः.

---

**ता॥** मताः' इत्युक्तम्;अत्र तु तत्फलित्वेन 'भक्तास्तेऽतीव मे प्रियाः' इत्युच्यते। अतस्स एवार्थोऽत्रोपसंह्रियते। अस्य चाधिकार्यन्तरपरत्वे तुशब्दविशेषणादयो हेतवः पूर्वमेवोक्ताः। अनेनैव च श्लोकेन मध्यमषट्कप्रधानार्थभक्तियोगोपसंहारश्च कृतो भवति। 'धर्म्यामृतम्' इत्यनेन विवक्षितमाकारद्वयं वक्तुं तदुपयुक्तं कर्मधारयत्वं दर्शयति—**धर्म्यंचामृतंचेति** । धर्मादनपेतं धर्म्यम् । अतोऽत्र धर्म्यशब्देन साधनत्ववचनादमृतशब्देनामृतसाधनत्वस्याविवक्षितत्वात्फलवदेव भोग्यत्वं विवक्षितमित्याह—**येतु प्राप्यसममिति** । **यथोक्तमिति** व्याख्येयपदोपादानम् । प्रसङ्गागतकर्मयोगोक्तेर्व्युदासाय—**मय्यावेश्येत्यादिकमुक्तम्**। पूर्वोक्तानामन्येषामपि भक्तत्वमस्तीति तद्व्यवच्छेदाय—**ते भक्ता** इति विशेष्यते। पूर्वेषु प्रियत्वमुदारत्वप्रयुक्तम्; अस्मिंस्तु स्वाभिमतान्तरात्मत्वप्रयुक्तम् । अतो ह्यतीव प्रियत्वमिहोक्तम् । उक्तं च प्रागेव—'उदारास्सर्व एवैते ज्ञानी त्वात्मैव मे मतम्' इत्याद्युपक्रम्य 'स महात्मा

---

**प्र-पा** ॥ १. गी. ७ १८ ॥ | २. गी. ७-१९ ॥

शं॥**'अद्वेष्टा सर्वभूतानाम्'इत्यादिना अक्षरोपासकानां संन्यासिनां परमार्थज्ञाननिष्ठानां धर्मजातं प्रक्रान्तम् उपसंहरति—ये तु संन्यासिनः धर्म्यामृतं धर्म्यञ्च तत् अमृतं च तत्, अमृतत्वहेतुत्वात्, इदं यथोक्तम् 'अद्वेष्टा सर्वभूतानाम्'इत्यादिना पर्युपासते अनुतिष्ठन्ति, श्रद्दधानाः सन्तः मत्परमाः यथोक्ताः अहम् अक्षरात्मा परमः निरतिशया गतिः येषां ते मत्परमाः, मद्भक्ताः च उत्तमां परमार्थज्ञानलक्षणां भक्तिम् आस्थिताः ते अतीव मे प्रियाः । 'प्रियो हि ज्ञानिनोऽत्यर्थम्' इति यत् सूचितं तत् व्याख्याय इह**

---

आ॥**पिण्डीकृत्योपसंहरति—ये तु धर्म्यामृतमिति । धर्मो विष्णुस्तद्विषयं धर्म्यम्। अमृतं मृत्यादिसंसारनाशकं चेति धर्म्यामृतम् । श्रद्धास्तिक्यम्। 'श्रद्धामास्तिक्यमुच्यते,**

---

ज॥'येतु' इत्युक्तमेव किमर्थमुच्यत इत्यत आह—**पिण्डीकृत्येति** । धर्म्यामृतमित्येतदप्रतीतार्थं व्याख्यातुं धर्मशब्दं तावद्व्याख्याति—**धर्म** इति । तद्विषयं तदुपासनाङ्गत्वात् धर्मादनपेतं धर्म्यम्; धर्मश्च विष्णुः; नादृष्टम्,प्रवृत्तस्यासंभवात्, निवृत्तस्यैतत्साधनत्वात्।इदानीममृतशब्दं व्याकुर्वन् धर्म्यामृतमिति कर्मधारयोऽयमित्याह—**धर्म्यमिति**। न मृतम् अमृतम्। नञ्विरुद्धार्थे; मृतशब्दश्चोपलक्षक इत्यर्थः । श्रद्धाना इत्येतद्व्युत्पादयति—**श्रदिति**। 'श्रच्छब्दस्योपसंख्यानम्'इत्युपसर्गत्वेनोपसंख्यायमानस्याप्यस्य

ता॥सुदुर्लभः' इति। एतेन 'अद्वेष्टा'इत्यादिना प्रक्रान्तं धर्मजातं 'ये तु धर्म्यामृतम्' इति श्लोकेनोपसंह्रियत इति परोक्तं निरस्तम्, भिन्नाधिकारविषयत्वस्य व्यञ्जितत्वात् ॥ २० ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीगीताभाष्यटीकायां तात्पर्यचन्द्रिकायां द्वादशोऽध्यायः ॥ १२ ॥

**शां॥उपसंहृतं'भक्तास्तेऽतीव मे प्रियाः' इति।यस्मात् धर्म्यामृतम् इदं यथोक्तम् अनुतिष्ठन् भगवतः विष्णोः परमेश्वरस्य अतीव प्रियः भवति, तस्मात् इदं धर्म्यामृतं मुमुक्षुणा यत्नतः अनुष्ठेयं, विष्णोः प्रियं परं धाम जिगमिषुणा ; इति वाक्यार्थः ॥ २० ॥**

इति श्रीपरमहंसपरिव्राजकाचार्य गोविन्दभगवत्पूज्यपादशिष्य श्रीमच्छङ्करभगवत्पादकृतौ श्रीमद्गीताभाष्ये द्वादशोऽध्यायः ॥ १२ ॥
द्वितीयं षट्कं समाप्तम् ॥ २ ॥

**आ॥इत्यभिधानम्। तद्धानाः श्रद्धानाः ॥ २० ॥**

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये द्वादशोऽध्यायः ॥ १२ ॥

ज॥सत्त्ववाचित्वमविरुद्धम्, उपसर्गत्वस्य कार्यविशेषार्थत्वात् ॥ २० ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां द्वादशोऽध्यायः ॥ १२ ॥



श्रीः

श्रीमते रामानुजाय नमः

श्रीमद्यामुनमुनिप्रणीतः

# श्रीमद्गीतार्थसंग्रह

भक्तेश्श्रैष्ठ्यमुपायोक्तिरशक्तस्यात्मनिष्ठता ।
तत्प्रकारास्त्वतिप्रीतिर्भक्ते द्वादश उच्यते ॥ १६ ॥

श्रीमद्यामुनमुनये नमः ॥

श्रीमन्निगमान्तमहादेशिकविरचिता गीतार्थसंग्रहरक्षा.

अत्रच भाष्यम्—'अनन्तरमात्मप्राप्तिसाधनभूतादात्मोपासनाद्भक्तिरूपस्य भगवदुपासनस्य स्वसाध्यनिष्पादने शैघ्र्यात्सुसुखोपादानत्वाच्च श्रैष्ठ्यं भगवदुपासनोपायश्च तदशक्तस्याक्षरनिष्ठता तदपेक्षिता श्चोच्यन्ते' इति। अत्र—**अतिप्रीतिर्भक्त**इत्यस्योपादानमुपसंहारमात्रताव्यञ्जनार्थम्'। **उपायोक्तिः**—'अथ चित्तं समाधातुम्' इत्यादिश्लोकद्वयेन कृता । भगवति चित्तं समाधातुमशक्तस्य भगवद्गुणाभ्यासः, तत्राप्यशक्तस्य प्रीतिपूर्वकभगवदसाधारणकर्मकरणम्,तस्मिन्नप्यसमर्थस्यात्मनिष्ठेति क्रमः।**तत्प्रकाराः**—कर्मयोगाद्यपेक्षिताः 'अद्वेष्टा सर्वभूतानाम्' इत्यादिनोक्ताः उपादेयगुणप्रकाराः । तथाच तत्र भाषितम् 'अनभिसंहितफलकर्मनिष्ठस्योपादेयान् गुणानाह ' इति । **अतिप्रीतिर्भक्ते**—'ये तु धर्म्यामृतमिदं यथोक्तम्' इत्यादिना अध्यायान्तिमश्लोकेनोक्ता। तदभिप्रेतं चैवमुक्तम्—'अस्मादात्मनिष्ठाद्भक्तियोगनिष्ठस्य श्रैष्ठ्यं प्रतिपादयन्यथोपक्रममुपसंहरति'—इति ॥ १६ ॥

श्रीमते निगमान्तमहादेशिकाय नमः.

